देववाणीमन्दिरमुखपत्रम्
प्रारंभः १९७९

# गीर्वाणसुधा

यथा पयोधेर्लहरीप्रसूता सुधा सुराणाममृतत्वहेतुः ।
तथैव गीर्वाणसुधापि भूयात् नवीनसारस्वतवीचिभूतेः ।।

खण्डः ४०    आषाढ-मार्गशीर्ष शके १९४०    अङ्काः-४-९

जुलै-डिसेंबर २०१८

संस्थापक : श्री. भि. वेलणकर
प्रधानसंपादक : प्रा. डॉ. सौ. कमल अभ्यंकर
संपादनसाहाय्यम् : श्रीमती वीणा गोडबोले



विमानसेवाद्वारा परदेशे प्रेष्यते ।

देववाणीमन्दिरम्
भीमाबाई राणे शाळा, तळमजला, राजा राममोहन रॉय मार्ग, गिरगाव, मुंबई - ४
devavaneemandiram@gmail.com

संस्थायै प्रदत्तं दानं S. 80-G आयकर-विधानद्वारा करमुक्तिं लभते ।
(Exemption of Tax as per S. 80-G, I.T. Act 1961 is available to our donors.)

वर्षम् :४० अङ्का : ४-९

# गीर्वाणसुधा ।

संस्थापकः
कै. पंडित श्रीराम वेलणकर
देववाणीमन्दिरम् - भीमाबाई राणे शाळा, तळमजळा, राजा राममोहन रॉय मार्ग, गिरगाव, मुंबई - ४०० ००४. (भारत)

आषाढ-मार्गशीष शके १९४० जुलै-डिसेंबर २०१८

## संपादकीयम् ।

सुहृदः,

गीर्वाणसुधायाः इयं संयुक्तपत्रिका भवत्सेवायां सानन्दं समर्प्यते अस्माभिः।

अस्यां पत्रिकायां बहुविधसंस्कृतभाषाकार्यार्थम् राष्ट्रपतिपुरस्कारेण सम्मानितायाः अस्माकं सुहृद्वर्यायाः डॉ. उमा वैद्यमहोदयायाः तथा देववाणीमन्दिरस्य कार्यकारिणीसदस्यायाः; सरस्वतीदेवी - विद्याविकासन्यासस्य कार्यवाह-सदस्यायाः श्रीमती उज्ज्वला पवार-महोदयायाः संस्कृतप्रसारकार्यविषये प्राप्तगौरवार्थं प्रकटम् अभिनन्दनं कर्तुं समर्थाः, इत्येतत् गीर्वाणसुधायाः भाग्यमेव ।

अस्मिन् अङ्के नित्यमिव संस्कृतजगति वर्तमानाः घटनाः, कार्व्हरः (क्रमशः) तथा संस्कृत-काव्य-कथादिकम् अन्तर्भूतम् । तत्र श्री विवेकानन्द घाटेमहोदयेन विविधज्ञानिनां सुविचाराणां कृतं संस्कृतपद्यरूपान्तरम् अवश्यम् उल्लेखनीयम् । तथैव श्री. दयाकरदाबकेमहोदयानां सविस्तरं सुगमं वृन्दावनयात्रावर्णनं वाचकानाम् अवश्यं कुतूहलपूर्तिकरम् ।

आगामि-पत्रिकासु अपि एवमेव नूतन-लेखकानां साहित्यम् अपेक्ष्यते ।

# गोमन्तकपरशुराममन्दिरम्

भगवतः परशुरामस्य वर्णनं रामायण-महाभारत[1]-भागवतपुराण-कल्किपुराणेषु समुपलभ्यते । जमदग्निजे भगवदवतारभेदे येन परशुना त्रिःसप्तकृत्वो भूमिर्निःक्षत्रिया कृता । अस्योत्पत्त्यादिकं यथा "अथ काले व्यतीते तु जमदग्निर्महातपाः । विदर्भराजस्य सुतां प्रयत्नेन जितां स्वयम् ॥ भार्य्यार्थे प्रतिजग्राह रेणुकां लक्षणान्विताम्। सा तस्मात् सुषुवे पुत्त्रान् चतुरो वेदसम्मतान् ॥ रुमण्वन्तं सुषेणञ्च विश्वं विश्वावसुन्तथा। पश्चात्तस्यां स्वयं जज्ञे भगवान् मधुसूदनः ॥ कार्तवीर्यवधायाशु शक्राद्यैः सकलैः सुरैः । याचितः पञ्चमः सोऽभूत्तेषां रामाह्वयस्तु यः ॥ भारावतारणार्थाय जातः परशुना सह । सहजः परशुस्तस्य तं न जहाति कदाचन ॥ अयं निजपितामह्याश्चरु-भुक्तिविपर्ययात् । ब्राह्मणः क्षत्रियाचारो रामोऽभूत् क्रूरकर्म्मकृत् स वेदानखिलान् ज्ञात्वा धनुर्वेदांश्च सर्वेशः । स्वतातात् कृतकृत्योऽभूद्वेदविद्याविशारदः॥[२]

महाविष्णोः दशसु अवतारेषु परशुरामस्य षष्ठः अवतारः ।[३] महापराक्रमशाली। धृष्टहैहयवंशीयक्षत्रियाणाम् एकविंशतिवारं विनाशः अनुष्ठातः परशुरामेण । परशुरामः पृथिव्यां वैदिकसंस्कृतेः प्रचारप्रसारं कर्तुमैच्छत् । भारतराष्ट्रस्य अधिकांशाः ग्रामाः तेन विनिर्मिताः येषु कोङ्कणप्रान्तः महाभारते गोपराष्ट्रम् नाम गोपालकानां राष्ट्ररूपेण प्रसिद्धम् गोवाराज्यं केरलराज्यं च ।

पौराणिककथानुसारेण भगवता परशुरामेण बाणेनैकेन साम्प्रतं गुजरातराज्यतः केरलराज्यं पर्यन्तं समुद्रं प्राणुद्यत । ततो या भूमिः विनिर्मिता सा परशुरामभूमिः नाम्ना सुविख्याता । इयं जीवसृष्टिः तस्याः प्राकृतिकसौन्दर्येण सहितं यथावत् सङ्गोपनीया इति परशुरामस्य भावः । अत एव अस्यां भूमौ स वन्दनीयः । तेनैव पूजनीयभावेन कृतज्ञतां प्रकटीकर्तुं च भगवतः परशुरामस्य मन्दिराणि स्थापितानि दृश्यन्ते । तेषु गोमन्तकपरशुराममन्दिरम् एकं वर्तते ।

गोवाराज्यं महाभारतकाले गोपराष्ट्रं नाम्ना प्रसिद्धं अपि च यथा अन्यप्राचीनसंस्कृतस्तोत्रेषु गोवाराज्यं गोपकपुरी गोपकपत्तनं नाम्ना समुल्लिखितं तथा हरिवंश-स्कन्दपुराणयोरपि ।[४] गवाञ्चलः गोवापुरी गोपकापत्तनं गोमन्तः इति अन्यानि नामानि सन्ति । तत्र भगवतः परशुरामस्य मन्दिरं स्थापितं दृश्यते । तदेव गोमन्तकपरशुराममन्दिरम् नामाख्यातम् ।

मन्दिरमिदं गोवाराज्यस्य काणकोणमण्डलस्य पैङ्गीणग्रामे वर्तते । स्थानमिदं पणजीतः ८०-८५ सहस्रमानं यावद्दूरं वर्तते । पैङ्गीणग्रामः एकः लघुः ग्रामः। अस्य मुख्यमार्गाच्चङ्क्रम्य अस्माकं पुरतः एव मन्दिरं दृग्गोचरीभूयते । मन्दिरस्य

वातावरणमतीव शान्तिपूर्णं वर्तते । तत्र आगम्य जना अपि शान्तिमनुभवन्ति । होलिकायाः तृतीयदिने यदा महापूजा वर्तते तदा महती यात्रा आयोज्यते । मन्दिरे प्रविष्टे सति दक्षिणे प्रार्श्वे भगवतः परशुरामस्य विलोभनीया मूर्तिः विद्यते । मन्दिरे वामतः द्वारेण प्रविष्टे सति प्रभोः श्रीरामस्य दर्शनं भवति । वस्तुतः उभे मूर्ती परस्परयोः पुरतः वर्तेते । अत्र पञ्चरात्रिः अनुष्ठानं वर्तते । अत्र जना पञ्च दिनानि निवस्य पूजामनुतिष्ठन्ति । इदं पूजानुष्ठानं सोमवासरे क्रियते अत जना गुरुवासरे मन्दिरमागम्य निवसन्ति । निवासस्य समीचीना व्यवस्था वर्तते । एकवारं तु अवश्यं गमनीयम् केवलं समुद्रतीरपर्यटनाद् विना ।

- डॉ. नीलेश जोशी



[1] महाभारते । ३ । ११६ । ५ - १८ ।

[2] कालिकापु॰ ८५ अ॰ I, VCPS, Page no. 4239-b38

[3] Name of one of the three रामऽ (son of जमदग्नि and sixth अवतार of विष्णु, he was a typical Brahman and his history typifies the contests between the ब्रह्मन्ऽ and क्षत्रियऽ ) kal v. Pur. MWB. xiii, 1 RTL. 110; 270 [MW.p=589,2 L=116729]

[4] Indian Achaeological Society (2006). Puratattva, Issue 36. Indian Archaeological Society.